


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ॰ प्र॰) भारतम्

संपुटः ८ | 15 MAY 1970 | क्रमांकः ५



साधारण-वैशाखांकः] शकवर्षः १८९१ [मूल्यम् ४० पैसाः

# विषयसूची








# अव भारतम्

अव भारतमवभारत मवात्मशिशूनस्मान् ।
दशशतपद, दशशतमुख, दशशतनयन ॥ ॥ अव ॥

सोमकारिमत्स्यरूप, मंदरधरकूर्मरूप
कनकनयनहरण कोल, हिरण्यकहर नारसिंह ॥ ॥ अव ॥

त्रिपदभिक्षुखर्वभाव, वनधिबन्धरघुराम,
दुष्टप्रभुगलकर्तन, हलमुसलसलील बल ॥ ॥ अव ॥

गोपीजनमानसहर, गोपालककुलदीपक,
कलिदुरितप्रहरणचण, हरिविचर खरासिधर ॥ ॥ अव ॥



# सम्पादकीयम्

## राजाजी - कांग्रेसश्च

राजर्षिः राजाजी स्वजन्मदिनोत्सवसन्दर्भं पुरस्कृत्य नवयुवकान् उद्दिश्य किंचिदिव, अत्यल्पमेव भाषितवान् ; न तु बहु । द्वितीये वयसि स्थितैः यथाकथञ्चित् सेवानिरतैर्भाव्यमिति संक्षिप्तरूपेण स संदिदेश । स्थाने चैतत् - सेवाभावेभ्यः महत्वाकांक्षाऽन्या । तस्य तस्याश्च महदन्तरम् ।

कांग्रेस संस्था कदाचित् भारते एकैकसेवासंस्थाऽसीत् । स्वातंत्र्य-प्राप्त्यनन्तरं क्रमात् तत्र सेवाभावः ह्रासं गतः, महत्वाकांक्षा वृद्धिं गता । यावत् सेवाभावस्य अकुण्ठिता निष्ठाऽनुवृत्ता तावत् संस्था अप्रकम्प्याऽप्रधृष्या चासीत् । अमीप्सितमपि सिद्धप्रायम् । महत्वाकांक्षायाः प्रादुर्भावं प्रवेशं च अवगत्येव महात्मा गान्धिः - "कांग्रेसः कृतकृत्य आसीत्" इति प्रकटीचकार । शासनकार्याय अन्य एव पक्षः कश्चित् स्थापनीय इति स्वाभिप्रायं व्याजहार । परन्तु बहुभिर्नायकैः तन्नाङ्गीकृतम् । स्वातन्त्र्य-समरे यश्च पक्षः महत्तरं कार्यभारं निरूढवान् स चेत् परिपालनावसरे पश्चात् गच्छति, अथ नाम्नाऽवशिष्यते, विलीनो वा भवति, तर्हि संस्थायाः तन्नेतॄणां च असामर्थ्यमेव प्रकटितं भवेदिति; किंच शासनार्हं पक्षान्तरमपि नास्तीति हेतोः अराजकताया एव प्रोत्साहः कल्पितः स्यादिति च बहुभिर्मतम् ।

तेनैव महात्मना सह सेवाभावोऽपि अपगतप्रायः। महत्वकांक्षायाः सर्वतः प्रसारश्च समभवत्। बहूनां त्यागधनानां अधोगतिः अवकाश-वादिनां नवागन्तुकानां च उच्चैर्गतिः इत्येषा विपरीता स्थितिः प्रवृद्धा।

महात्मा गान्धिः स्वयं शिक्षित इव संस्थायाः बहिरासीत् चेत्, स्वाभिमानस्य आघातमसहमानाः, सव्यदक्षिणयोः तारतम्यं अप्रदर्शयद्भिः सहकर्तुं अनिच्छन्तश्च केचिदन्ये नेतारः संस्थायाः बहिर्निर्गताः। केचित् वृद्धास्तु प्रवर्धमानं अवगुणं संस्थायाः जानन्तोऽपि उदासीनवदासन्। तेषामियं नीतिः स्वात्मारामतां प्रकाशयामास। यावद्वयं तावत् इयं नौः गच्छत्येव; अतःपरं किं भविष्यतीति कुतोऽस्माकं चिन्ता। इत्येवं रीत्या कांग्रेससंस्थातो सेवाभावस्य, त्यागशीलस्य आत्मसम्मानस्य च महतो महानंशः निर्गतप्रायः। अवशिष्टेन किंचिदूनेनाऽपि तेन सुगुणेन अद्यावधि संस्था सजीवा शासनाधिकारे अनुवर्तमाना च अस्ति। परन्तु इदानीन्तनसंघटनैः संस्थायाः जीविताशाऽपगता। डिसंबरमासे द्वैधी-भावं गता च।

द्विधा खण्डितोऽपि कश्चित् प्राणिति प्राणी इत्यनुशुश्रुम। तद्वत् अयं कांग्रेसोऽपि द्विधाभूतः सजीव एव स्यात्। द्वाभ्यां पक्षाभ्यां कांग्रेसः व्योम-गमनं कर्तुं शक्नुयादपि। यश्च महत्तरः पक्षः स शासनाय चेत् अल्पतरोऽन्यः पक्षः प्रतिपक्षस्थाने स्थित्वा सर्वकारस्य कृतं-कर्तव्य-कार्य जातं विमृशन् विद्येत। सृष्टि स्थिति-लयानां कारणं ब्रह्मेति वदन्ति भारतीयाः। इदानीं कांग्रेसः ब्रह्मभूयाय कल्पते स्म इति मन्तव्यं भवति। क्वचित् स्थित्वा अनुशास्ति चेत् अन्यतः स्थित्वा विमृशति इति ब्रह्मस-ब्रह्मचारिता सिध्यति कांग्रेसस्य।

महाभाष्यकृता प्रोक्तम् – "न हि कुक्कुट्याः पूर्वोभागः पाकाय, अपरो भाग अण्डाय" इति। परन्तु कांग्रेसकुक्कुटी पूर्वकायेन देशानुशासनं उत्तरकायेन जनताभिमानं च संपादयितुं प्रयतत इव। इयमिदानीन्तनी वस्तुस्थितिः।

यदि शक्तोऽसि मात्स्यन्यायं प्रवर्तय; अर्थात् सर्वं यावच्छक्ति स्वायत्तीकुरु। यद्यशक्तोऽसि आत्मसमर्पणं कुरु; फलतः शरणागतिमन्त्रेण निर्भरतां निर्भयतां च प्राप्नुहि।

राजकीयक्षेत्रे आत्मसमर्पणं न सम्मतम् चेत् तर्हि द्विधा भवेति नीतिरस्त्येव चरमोपायः। शक्तश्चेदात्सात्कुरु सर्वम्, यद्यशक्तः आत्म-समर्पणं कुरु; तदपि न सम्मतं तर्हि तृतीया गतिरस्त्येव अभिप्रायभेदेन द्वैधीभावसमाश्रयणम् - इति पूर्वं राजाजीसंदेशं संक्षिप्योक्तम्। तमेवांशं विपुलयितुम् अवकाशः प्राप्तः।

सर्वं आत्मसात्कर्तुं चेत् प्रयत्नः; तर्हि महान् प्रभावः अपेक्षितम्। इन्द्राद्यष्टदिक्पालकानां प्रभुशक्तेः समन्वयः, एकत्रीकरणम्, सामानाधि-करण्यम् वा संपादनीयम्। राजनीतेः प्रथमं सोपानम् इदम् प्रभुशक्तिर्नाम। अनेनैव प्राभवेण आत्मनो महत्ता बृहत्वं बृहदाकारता सिध्यति। यो हि मत्स्यः अन्यान् मत्स्यान् भक्षयितुमलम् स एव शिष्यते अन्ये तु नाम्नैव। एवमेव राजकीयक्षेत्रेऽपि यः प्रभुः स एव सर्वं आत्मसात्कर्तुं शक्नोति। कांग्रेसे स्वायत्तीकर्तुं महान् प्रयत्नः कृतः; परन्तु स न सफलः। आत्म-सात्करणे प्रवृत्तस्य आत्मसमर्णं चातुर्यं नाम द्वितीयं बुद्धिलक्षणं प्रथमाति-क्रमणे। तदपि न प्रवर्तितं कांग्रेस नेतृभिः; तै रात्मा संमानितः प्रत्येकम्। आत्म-संमानेऽपेक्षिते आत्मीयतान्यत्र लुप्यत इति नैसर्गिकी स्थितिः।

(शिष्टम् १२ पृष्ठे)

# गान्धिदण्डकम

श्रीमन्महात्मन्, दुरालोक पाश्चात्यसंस्पर्धिचर्य, प्रभावाभिमुख्य प्रभूतारिवर्गस्वकीयात्मविश्वासनिर्वर्तिताशेषकार्य, स्वबाल्यादितः सत्य-वाङ्निष्ठ, धर्मिष्ट, तत्वज्ञ, विद्वन्, करंचन्दविज्ञाच तत्पुत्तलीबायिमाध्वीं प्रसूत. स्वतो घूर्जरेषु प्रसिद्धे च पोर्बंदराख्ये पुरे जात. सन्मोहनाख्यात, विख्यातसौशील्यवात्सल्यकारुण्यसंगण्यवृत्ते, स्वद्वेषे जुगुप्सां परेषां गुणे चादरं मेदुरं विभ्रता स्वेन निर्वर्तिता आत्मदोषप्रशान्त्यै निराहारदीक्षाः कतीव, प्रभो श्लाघिता वा कति द्विड्वरेण्याः कति द्विड्वचांसि, त्वदीयानुवृत्या खल्वुत्तारणं प्राप्नुवन्नाफ्रिकादक्षिणीयाः स्वयं भारतीयाः, त्वदीयानुवृत्या खल्वुन्मूलिताः क्रूरपाश्चात्यनाथाः. विना रक्तबिन्दुं विना च व्रणांकं विना प्राणहानिं विना मानभङ्गं सुपक्वम् च वृन्तादयथा स्याद्विलूनम् फलं तद्वदात्तं स्वतन्त्राधिपत्यम्, तथा पीषदप्याशया दूरभूतः, स्वतन्त्राधिपत्यं परेष्वेव निक्षिप्य लाभम् च नष्टम् समम् भावयन्, स्थूलशाटीकटीवेष्टना-दृष्टशालिन्, तथा मूलफल्यालम्भ भक्षयन्, मेषदुग्धं पिबन्, राम-रामेति रामस्य नामैव संजीवकम् धारकम् पोषकम् चिन्तयन्, क्रूरकारा-निवासेषु सौधाग्रगेहेषु, चंडालबाटीषु चैकेन भावेन तिष्ठन्, स्वलावण्य-सत्याग्रहे दण्डियात्रां महोद्दण्डचित्रां विनिवर्तयन्, अन्यदेशीयशाटीपटी-दाहयज्ञोत्थधूमावलीविभ्रमभ्रांतयूरोपराज्यं समुच्चाल(ट)यन्, नित्यसत्या-ग्रहोदग्रखड्गेन तन्निस्सहयत्नमल्लेन चैवम् करस्तम्भनव्याजकृन्तेन तान् विद्विषः कान्दशीकान् विधायैव विद्रावयन्, आत्मदेशे च संस्पर्शदोषस्य निर्मूलनायालयेष्वन्त्यजानां जनानां प्रवेशं समुद्घोषयन्, मुस्लमानां सुहृद्भावमाकांक्ष्य तत्प्रान्तभूमौ महसंकटे पयटन्, देशशैथिल्यमूलानि सर्वाणि विज्ञाय तत्तन्निवृत्यै च निर्माणकार्याणि चिन्वन्, स्वराज्याय जीवन्, स्वराज्यार्थमेव स्वदेहं धरन्, भारतीयत्वसंरक्षणायैव सर्वप्रयत्नै-

स्मरन्, स्वेष्टसिद्धौ च सत्यां स्वकीयावतारं त्यजन्, भो महागांधिनामन्, महाकांतिधामन्, मनीषाविशेषार्जिताशेषभूमन्, इदानीन्तनानां महानायकानां दुराशावशानां कुनीतिप्रयुक्तां दुरन्तामिमां दुर्दशां भारतस्य व्यपोह्याभिरक्ष, स्वलाभैकनिष्ठैरमेरीकरूसैः पुरस्तात्प्रसक्तं महामोहजालं लुनीहि प्रभो, चैनपाकस्थलीयैः प्रक्लृप्तं समुल्लंघन देशसीम्नः समन्तात्स्वमन्तर्विभेदम् दलानां, समुल्लोलकल्लोलचर्या जनानां मतख्यापकानां मतोद्बोधकानां मतभ्रंशकानां महामाधनानां विनिर्मूल्योन्मूलयाश्चर्यचर्य. प्रकृत्यान्यदेशेषु भक्तान् विभक्तान् स्वदेशीयरक्तस्य पाने प्रसक्तान् किरातानरातीन् जहि स्थानदम्य, स्वमातुः पयः प्राश्य तस्यास्तनम् वै प्रहृत्यातिमात्रं प्रहृष्यत्सुतानां मतौ मातृभक्तिर्यथा स्यान्निविष्टा तथाऽनुग्रहार्थं हि याचे भवन्तम्, यथा चास्मदीयराजायां तु क्रीस्तेष्वधोमुस्लिमेषु स्वतो हैन्दवेषु प्रबुद्धो भवेत् भारतीयत्वभावस्तथानुग्रहाण प्रभो दिव्यशक्ते, महाभारतस्य प्रदेशा विभक्तास्तथा चाविभक्तत्वभावः प्रणष्टः, पृथङ्मण्डलानां जलानां स्थलानां कृते वैरभावा भवन्तीह कले, प्रभो गांधितात, त्वमस्मत्प्रजानां मनांस्यैक्यमत्ये निवेश्याव देव, प्रजास्स्युः प्रशांताः, प्रजास्स्युर्दृढांगाः, प्रजास्स्युर्गभीराः प्रजास्युर्मुमुक्षाढ्याः, सदा सत्यवाचस्सदा धर्मनिष्ठास्सदा दैवभक्तास्सदा देशभक्ताः, त्वदीयानुकम्पावशात्स्युर्नितान्तम्, नमस्सत्यमूर्ते, नमस्सर्वशक्ते, नमोनन्तकीर्ते, नमः पापहर्त्रे, नमस्साधुवर्तिन्नमश्चक्रवर्तिन्नमस्सत्त्ववर्तिन्नमस्ते नमस्ते नमस्ते नमः ॥



# सुभाषितानि

लें० श्री यन्. रामनाथार्यः

जनयन्त्यार्जने दुःखं आर्जितानां च रक्षणे ।
मोहयन्ति च संपत्तौ कथमर्थास्सुखावहाः ॥ ॥ ३११ ॥

How is wealth conducive to happiness considering that it is difficult to acquire and equally so to protect it. It also infatuates a person when he is prosperous.

निर्वाणदीपे किमु तैलदानं चौरे गते वा किमु सावधानम् ।
वयो गते किं वनिताविलासः जलेगते किं खलु सेतुबन्धः ॥३१२॥

What is the use of oil after the light is gone; what is the use of vigilance after things are stolen; what is enjoyment with women after youth is spent and what is the use of damming the waters after they escape.

विकृतिं नैव गच्छन्ति संगदोषेण साधवः ।
आवेष्टितं महासर्पैः चन्दनं न विषायते ॥ ।३१३॥

Great men never change their nature though they get into contact with bad things.

The sandal tree does not become poisonous though surrounded by serpents.

चलत्येकेन पादेन तिष्टत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ॥ ३२४ ॥

A wise man puts forward one foot after firmly placing the other foot in its previous position We should not give up our previous post without examining the now situation.

चातकः त्रिचतुरः पयःकणान् याचये जलधरं पिपासितः ।
सोपि पूरयति भूयसांभसा चित्रमत्र महतामुदारता ॥ ॥ ३२५ ॥

Strange indeed is the broad-mindedness of greatmen. The thirsty Chataka birds beg the cloud for three or four drops of water but he satisfies them with a profsion of water.

विवेकस्सह संयत्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ॥ ३२६ ॥

Discrimination with restraint of senses, knowledge with modesty, and sovereignity with politeness-these are the characteristics of great-men

(सशेषम्)

# पदार्थविज्ञानसारः

## [पूर्वानुबन्धः]

शिष्यः - उल्कानिपाते सति यत्र स्थानविशेषे कदाचित् पाषाणः पतति तत्किम् ?

गुरुः - तत्केन प्रकारेणोत्पद्यते इति नहि कैश्चिन्निश्चीयते। अग्निमय-पर्वतादुत्तिष्ठति इति केचिद्वदन्ति, चन्द्रात् पतति तदित्यपरे वदन्ति। किंवा गगनमण्डले कस्मादपि वस्तुनः समुत्पद्य पततीति धीमद्भिर्बुध्यते।

---

### अथ तृतीयकथोपकथनम्

### स्थिरवायुसामान्यवायुबाष्पवृष्टिप्रभृतिविशेषाभिधानविषयकम्

---

शिष्यः - हे गुरो ! स्थिरवायोर्विशेषमहं बहुधा श्रुतवान्। किन्त्वदृश्यवस्तुत्वात् तत् किं मया ज्ञातुं शक्यते ?

गुरुः - शक्यते। स्थिरवायुरेकम् द्रवमयम् वस्तु। यदा तच्चलति तदा वस्त्वन्तरम् चालयति। तस्य च त्रयो गुणाः विरळताऽस्फाटिकवत् स्वच्छता, संकीर्णता चेति। यदा संकीर्णः क्रियते तदा वारुदव-दाश्चर्यशक्तिस्तस्य जायते।

शिष्यः - स्थिरवायोरपरः कश्चिद्गुणो विद्यते वा ?

गुरुः - तस्माच्छब्द उत्पद्यते । अतस्तेन विना वयं श्रोतुं न शक्नुमः । यदि तद्वायुर्नासीत् तदा रागरागिण्यादयो नासन् । एवमाघ्राणश्चास्माकं नाभवत् । तथा परस्परकथोपकथने वयमशक्ता भवामः । स्थिरवायोरभ्यन्तरे चेदृक् परमाणुर्वर्तते यस्मिन् सूर्यरश्मयः प्रकाशन्ते । अत एव तद्वायुर्यदि नासीत्तदा गगनमण्डले यत्र सूर्यस्तिष्ठति केवलं तत्रैवालोकस्स्यात् । एवम् मध्याह्नेपि ग्रहनक्षत्रादयः प्रदृष्टा भवन्तु ।

शिष्यः - स्थिरवायुः कतिविधो वर्तते ?

गुरुः - स च द्विविधः । एकः प्राणदायकः, अपरः प्राणनाशकश्च ।

शिष्यः - स्थिरवायौ तयोः कस्य कियानंशो विद्यते ?

गुरुः - शतसंख्यकांशकस्थिरवायोः शतांशमध्ये प्राणदायकस्यैकविंशत्यंशाः प्राणनाशकस्यैकोनाशीत्यंशाः ज्ञातव्याः ।

शिष्यः - जलापेक्षया स्थिरवायुः कियान् लघुः ?

गुरुः - षोडशोत्तराष्टशतगुणेन स्थिरवायुर्लघुः ।

शिष्यः - प्रतिमनुष्यशरीरोपरि स्थिरवायोः कियन्तो भाराः संति ?

गुरुः - प्रतिशरीरोपरि द्विचत्वारिंशत्संख्यक लोकप्रसिद्धमण परिमित भाराः संति ।

शिष्यः - अहो किमेतत् यदेतादृशभारेषु सत्सु वयं तान् बोद्धुम् न शक्नुमः ।

गुरुः - अत्रैतत् कारणम् । शरीराभ्यन्तरे शरीरबाह्ये च ये स्थिरवायवः संति तेषां परस्परसंघर्षेण हेतुना तद्भारो नावबुध्यते ।

शिष्यः - सर्वेषां स्थिरवायूनां कियन्तो भाराः ?

गुरुः - 576120578100888544 एतत्संख्यक (अशीतितोलकमानलोक-प्रसिद्ध) सेरपरिमाणेन तेषां भारः ।

शिष्यः - समीरणः किम् ?

गुरुः - यदा स्थिरवायुश्चलति तदा समीरणः प्रोच्यते ।

शिष्यः - स्थिरवायुर्यच्चलति तत्र कारणम् किम् ?

गुरुः - ग्रीष्मः शीतं च यत् स्थिरवायौ विद्यते तस्मादेव स चलति । ग्रीष्मेण स्थिरवायुर्विस्तृतो भवति, शीतेन च संकीर्णः क्रियते । यत् समीरणविशेषो भवति तत् कारणम् केनापि हठाद्वक्तुम् न शक्यते । वस्तुतो यदा ग्रीष्मेण स्थिरवायुर्विरलो भवति तदा स्थिरवायोरविरलोंशस्तत्र वेगेन प्रविशति । अनेन रूपेण समीरणविशेषा जायन्ते ।

शिष्यः - समीरणस्य किं विशेषनामास्ति ।

गुरुः - अस्ति । यस्या दिशो वायुर्वहति तन्नामानम् स लभते । अतः पूर्वपश्चिमदक्षिणोत्तराविभागेन समीरणाः प्रोच्यन्ते ।

शिष्यः - मया केन रूपेण एता दिशो निरूपितव्याः तत् किं गुरो स्वानुग्रहेण मां वक्ष्यसि ?

गुरुः - प्रातःकाले सूर्याभिमुखे त्वयि स्थिते त्वत्सम्मुखभागे या दिक् सा पूर्वा दिक्, पश्चाद्भागे पश्चिमा दिक्, दक्षिणभागे दक्षिणा दिक्, वामे चोत्तरादिगिति वेदितव्यम् । निशासु त्वयि ध्रुव-ताराभिमुखे स्थिते त्वत्सम्मुखभागे या दिक् सोत्तरा । पश्चा-द्भागे दक्षिणा, दक्षिणभागे पूर्वा, वामभागे पश्चिमेति वेदितव्यम् ।

शिष्यः - समीरणात् किं फलं भवति ?

गुरुः - समीरणतोऽसंख्यानि फलानि जायन्ते। पश्य, सः स्थिरवायुम् निर्मलीकरोति, ग्रीष्मस्य चाल्पत्वम् विदधाति, आर्द्रीभूतम् गृहम् आप्लावितम् भूमिं च शुष्कतां नयति, कुज्झटिकां निवारयति। समये हिमहिमानीः समानयति। एवमाकाशं निर्मलम् करोति। वाणिज्यादि कर्मणि रत्नाकरे बृहन्नौप्रयाणे वणिजामुपकरोति च।

शिष्यः - वायुः कियत्शीघ्रं गच्छति।

गुरुः - सार्धदण्डद्वयाभ्यन्तरे क्रोशैकमारभ्य षष्टिक्रोशपर्यन्तं गन्तुं शक्नोति। तत्कालाभ्यन्तरे यदा क्रोशमेकं चलति तदा वायुरतिमन्दं वहति। तत् प्रायः कैर्नाविबुध्यते। तत् काले च यदि षष्टिक्रोशान् गच्छति तदा महती झञ्झरेत्युच्यते। साधारणमध्यमो वायुः सार्धदण्डद्वयमध्ये पञ्चदशक्रोशं चलति। यस्तु निर्घातवायुर्वेगेन वृक्षपद्मधाटीर्नाशयति स हि दण्डेनैकेन चत्वारिंशत् क्रोशं गच्छति।

शिष्यः - वायुः कतिविधो भवति ?

गुरुः - स च त्रिविधो भवति। एकः साधारणः यस्सततं वहति। द्वितीयः यस्तु मासविशेषे वहति। तृतीयश्च यो हि समुद्रात् पृथिव्या वा कालविशेषे उपतिष्ठते।

शिष्यः - सर्वदा वहति यः साधारणो वायुः तथा मासविशेषे वहति यो वायुस्तत् कारणम् किम् ?

गुरुः - तत् कारणम् सूर्यस्य तापः।

(सशेषम्)

[संपादकीयस्य शेषः]

एवं आत्मीयत्वालोपेन परस्परदूषणेन परस्परस्य परस्परेण अनात्मभावः साधितः । कांग्रेसस्य कश्चित्पक्षः पक्षान्तरं कांग्रेसभिन्नं मन्यते; एवं उत्तरः पूर्वं कांग्रेस नेत्याह । जनतायाः इदं संदेहास्पदमासीत् "कांग्रेसे आत्मा अस्ति उत नास्ति; अस्ति चेत्कुत्राऽस्ति कुत्र नास्ति" इति । एतदर्थं उभावपि पक्षौ आत्मनिरूपणाय प्रयतितवन्तौ। गान्धीनगर एव आत्मोज्जीवनं मन्यन्ते केचित् ; अपरे पुनः आज़ाद (स्वतन्त्र) नगर एव आत्मतत्वसाक्षात्कार इति घोषयन्ति। एवं उभयैरपि कांग्रेसात्मा क्लेशितः । कायात् आत्मानं आत्मनः कायं च विश्लिष्य-पृथक्कृत्य निर्देशितं उभयैरपि शस्त्रचिकित्सकैः अन्ततो गत्वा । किन्तु उभावपि न जानीतः कुक्कुट्याः पूर्वो भागः पाकाय, अपरो भागश्चाण्डायेति कथं सिध्यतीति। पृथक्करणे न उभयसिद्धिः अयमात्मा, इदं शरीरं इति कथं पृथक्कर्तुं शक्यते शस्त्रचिकित्सकैः । शरीरं छित्वा भित्वा चेदात्मान्विष्यते तर्हि तद्गवेषणं कथं फलतीति न पुनर्वक्तव्यम् ।

पितर्युपरते, ज्येष्ठभ्रातरि च दिवंगते समष्टि-भावविहीनाः निहीना भ्रातर इव कांग्रेसदायादाः संजाताः । तस्य किं अस्य किं - इति दाय भागेऽपि प्रवृत्तिर्दृश्यते। सुष्टुक्तं राजाजिना - "चर्खा कस्यचित् चेत् वृषद्वयमन्यस्य" इति । किं वा भविष्यति ? यथाकथंचित् सेवानिरतै-र्भाव्यमुभयैरपि इति पूर्वोक्तम् राजाजी सुभाषितमेव स्मर्तुं युक्तम् ।



न्यायमाला ६

# अहिनकुलन्यायः

"अवरः"

अहिश्च नकुलश्च अहिनकुलौ। अयं द्वन्द्वसमासः। उभयपदार्थ-प्रधानः द्वन्द्वः इति वैयाकरण समयः। आनुकूल्ये वा प्रातिकूल्ये वा विरोधे वाऽनुरोधे वा स्थितानां "सह वा प्रवृत्तिः सह वा निवृत्ति" रित्येषा रीतिः केवलम् व्याकरण एव सिद्ध्यति इति मन्ये। नो चेत्कथम् "श्वानम् युवानम् मघवान" सूचे महर्षिः। श्वा क्व ? युवा क्व ? अथ मघवा वा क्व ? त्रयाणां एकत्र समावेशं – सह प्रवृत्ति - महर्षेः सूत्रं साधयति। तत्सूत्रनिबद्धाः सर्वेऽप्यर्थाः शब्दा इति तु नाम्नैव केवलम्; यतः शब्दशास्त्रं शाब्दिका इति प्रथा) सर्कस्-शाला गता इव नटन्ति। वृत्तयोऽपि सूत्रनिबद्धा एव। द्वन्द्वोऽपि निर्द्वन्द्व इति न वक्तुम् शक्यते। सोऽपि सूत्रबद्ध इव नटति। विरुद्धानामपि द्वन्द्वः, संबद्धानामपि द्वन्द्वः। रामश्च कृष्णश्च द्वन्द्वनिष्ठश्चेत्; अहिश्च नकुलश्च तन्निष्ठः कुतो न स्यात्? भ्रातृभावेन संबद्धौ रामकृष्णौ यथातथैव शत्रुभावेन विरुद्धौ अहिनकुलावपि द्वन्द्वमाश्रितौ न्यायाधिकरणम् प्रविशतः। अनयोः न्यायं को वा प्राड्विवाको ब्रूयात्। अस्तु; ब्रूमः।

"हीनः" एव अहिरभावदिति पुराणगाथा। नकुलस्तु प्रसिद्ध एव यस्य कुलमेव नास्तीति। एवं च उभावपि हीनवेव न्यायाधिकरणं प्रविशतः; परस्परविरोधेन। अस्मिन्नधिकरणे को वा विजेता को वा विजितः; को दुर्बलः को वा प्रबल इति मास्तु

विचिकित्सा। उभयोर्विरोधे एकतर विजयः इति तु सिद्धान्तः । यश्च बलवत्तरः सोऽन्यं जयतीति प्रकृतिसिद्धोऽयमंशः । नकुलः खण्डशः छिन्द्यादप्यहिं कदाचित्; कदाचित् भुजङ्गोऽप्युत्तुङ्गो निजफणाक्षेपण निपुणो नकुलं विषवेगेन विसंज्ञमपि कुर्यात्। न च कुलं नास्तीति एतदेव किंतु संज्ञाऽपि नस्यात्तदा तस्य। अतः यत्र यत्र विरोधः तत्र तत्र अहि-नकुलन्यायः इत्येव मन्तव्यम्। न तु कः प्रबलः को दुर्बल इति विचिकित्साया अवकाशः ।

तुल्यबलानामेव विरोधः, न तु दुर्बलानां प्रबलैस्सह। तुल्यबलानां विरोधे सति तु नैकतरविजयः अन्यतरापजयो वा प्रथमं विरोधे सत्यपि अन्ततो गत्वा बलसाम्यात् उभयोः संधिरेव भवेत्; नान्यः पन्थाः । अहिर्नकुलं बलवद्द्वेष्टते चेत् नकुलोऽपि बलवच्चेष्टते। यावदुभावपि प्रशान्तौ न भवतः तावत् संधि र्नभवति। परस्परविरुद्धौ कदाऽपि शान्तौ न भवत इति प्रकृतिसिद्धान्तः ।

परन्तु परस्परविरुद्धावपि प्रकृतावेव वसन्ति कथमितिचेत् देश-भेदेन कालभेदेन च विरोधः परिहार्यते। बिले निलीनस्य सर्पस्य नकुलेन न संघर्षः। शीतोष्णयोर्द्वन्द्वं यद्यप्यस्ति तथाऽपि हेमन्तस्य ग्रीष्मस्य च महान् कालो व्यवधायकः। क्वचिच्छिशिरवसन्तो, क्वचित्प्रावृट्शरदौ च तौ परस्परविरुद्धौ ग्रीष्म-हेमन्तौ दूरं स्थापयतः। एवं च तत्तत्काला-वच्छेदेन च परस्परविरोधिनां विरोधः परिहार्यते। देशकालयोर्विरोध एव सर्वत्र प्रतिफलतीति ज्ञायते। अस्तु यत्किंचित्; परस्परविरोधे अहिनकुल-न्यायः अवतरतीति न विस्मर्तव्यम्।

---

# गुर्जरराज्यसंस्कृतसम्मेलनम्

(वटपत्तने संस्कृतविद्वत्सभया अचिराद् आयोक्ष्यते)



संस्कृतभाषाप्रणयिनः सज्जनाः !

अद्यत्वे यां परिस्थितिं वयं पश्यामः सा परिस्थितिः संस्कृतविद्योन्नत्यै न प्रचुरामाशां समुत्पादयति । प्रतिदिनं संस्कृतविद्यायां ह्रास एवावलोक्यते । ये केचन संस्कृतं पठन्ति, तेषामपि तलस्पर्शिज्ञानवन्तोऽतीव दुर्लभा भवन्ति । एवंविधे व्यतिकरे संस्कृतस्योन्नतेराशा कथमनुसन्धेया ? अत एव संस्कृतोन्नतये भूयांसः सुदृढाः प्रयासा आवश्यकाः । अत्र को लाभ इति जिज्ञासायां वयमश्लथया वाचा वक्ष्यामः । यथा —

नीतेः सत्यस्य वा को लाभ इति प्रश्नो नीतेः सत्यस्य वा सुमहानवमानः । न हि ते उभे लौकिकैर्मूल्यैस्तोलयितुमर्हे । नहि तदुचितमपि । लौकिको लाभ आर्थिको वा लाभो भवतु मा भूद्वा, तथाऽपि नीतिस्तु नीतिरेव, सत्यन्तु सत्यमेव । ये सर्वत्र लाभशब्देनार्थिकं लाभमेव परिचिन्वन्ति, ते आर्थिके लाभेऽसति नीतिमपि न्यक्ष्यन्ति, सत्यमपि उज्झिष्यन्ति । अनेनैव लाभशब्दस्य अर्थलाभ इति अर्थकरणेनैव भारतं प्राप्तस्वातन्त्र्यमपि प्रतिदिनं दुर्गतिपथे एव विचरति । सत्यं नीतिश्चार्थिकं लाभमदृष्ट्वा जनाः परित्यजन्ति । परमतत्त्वरूपे ते उभे अपि कम्पन्ति । अन्यथार्थं लाभं प्राप्नुवन्तः क्रन्दन्ते । एतद्विषये बहु विवक्षितं कदाचिद्वक्ष्यते । एवं धर्मस्य संस्कृतस्य चाराधने आर्थिकं लाभं विचिन्वन्तस्तुष्यन्तु दुर्युक्तिबहुलाभिः स्वाभिर्विचारधाराभिः । आर्थिको लाभः स्यान्न स्याद्वा, संस्कृतं तु संस्कृतमेव । अद्य यावत् पूर्वैर्नः कदाप्ययं प्रश्नो न प्रतिष्ठां गमितः, सुरक्षितश्च संस्कृतमद्य निभाल्यते ।

अथाप्यस्मिन्युगे कमपि लौकिकं लाभमपश्यन् जनः कर्मणि न प्रवर्तते। यद्यपि एष सुमहान् बुद्धेस्तिरस्कारः अनया विचारसरण्याऽन्ततः सर्वध्वंस एव परिणामः संपत्स्यते। तथापि लाभशब्देनार्थलाभमेवार्थं गृह्णतां संतोषाय तैस्तैः संस्कृतप्रचारं विपुलमिच्छद्भिर्जनैर्मण्डलैः संमेलनैश्च प्रसंगे प्रसंगे सर्वकारः प्रार्थ्यते, तेनैव लाभ इष्यते च। यथा नीतिमतां नीत्या अर्थेन तुलना न साधीयसी मन्यते, तथैवात्र। सर्वत्र सर्वमपि साहाय्यं सर्वकारादेवापेक्षणीयमिति चेन्महतीयं विगर्हणा पुरुषकारस्य। एतदन्यत्। अस्याः संस्कृतभाषायाः उन्नतये प्रचाराय च संस्कृतविद्वत्सभायाः सर्वोऽपि प्रयासः। प्रकाश्यतेऽनया सभया "सरस्वतीसौरभम्" नाम्नाऽनियतकालिकम् स्वं मुखपत्रम्।

अल्पेन कालेनेयं विद्वत्सभा "गुर्जरराज्यसंस्कृतसंमेलनम्" नाम्ना पिप्रथयिषितायां परिषदि समग्रगुर्जरप्रदेशे वर्तमानान् भिन्नविषयविदग्धान् विदुष एकत्र प्रदर्शयितुम् वांछति एतेन विज्ञातम् भवेद्भवताम्, यदत्र संमेलने गुर्जरराज्यप्रदेशे वर्तमानो विद्वद्रूपेण, सर्वोऽपि सारस्वतो विभवो दृष्टः स्यात्। अन्येऽपि परमादरणीया विद्वांसः समेष्यन्त्यत्रेति अत्र सर्वेषां सुजनानां सहकारोऽनन्यथासिद्ध इति किं ब्रूमः। अतःपरमेतदर्थमस्याः सभायाः प्रचारपत्राणि द्रष्टव्याणि। तेन समग्रं व्यवस्थां सम्यग्गूय ज्ञास्यथेति। अत्र संमेलने सरस्वतीसौभाग्यस्येव मूर्तस्य विद्वत्समवायस्य दर्शनम् संस्कृत संस्कृतोन्नतिविषये निबन्धानां श्रवणं संस्कृतभाषाप्रवचनानाञ्च। इद रसविदां सस्कृतभाषारसिकानां पुण्यं पर्व संप्राप्तम्। शक्यश्चेदत्रोपस्थित्या, अर्थानामनर्थत्वम् निवार्यार्थित्वसंपत्तयेऽर्थेन, (यद्यक्लेशेन भवति) सरस्वतीसेवायां सहकारेण भवतां साहाय्यमत्रापरिहार्यं भवत्विति विज्ञापयन्ति।

| | | |
|---|---|---|
| बदरीनाथ का. शास्त्री | ब. ल. शानभागः | चन्द्रकान्त न. पुराणी |
| अध्यक्षः | प्रधानमन्त्री | प्रकाशनमन्त्री |
| वटपत्तनसंस्कृतविद्वत्सभायाः | वटपत्तनसंस्कृतविद्वत्सभायाः | वटपत्तनसंस्कृतविद्वत्सभायाः |

# श्रीमदुभयवेदान्ताचार्यपीठम्

## तदीयानां परीक्षाणां नियमावलिः

श्रीभाष्यचार्यपरीक्षा —

प्रथमः भागः — (1) श्रीभगवद्गीताभाष्यम् (रामानुजीयम्) (2) उपनिषदः ईशकेनकठप्रश्नमुंडमांडूक्यैतरेयतैत्तिरीयछांदोग्यबृहदारण्यश्वेताश्वतरसुबालकौपीतकयः श्रीरंगरामानुजभाष्यसहिताः (मूलस्य कण्ठस्थीकरणमनावश्यकम्)

द्वितीयः भागः — (1) यतीन्द्रमतदीपिका (2) वेदान्तसारः (3) वेदान्तदीपः (4) सिद्धान्तसिद्धांजनम् (5) न्यायसिद्धांजनम् (6) वेदार्थसंग्रहः ।

तृतीयः भागः — श्रीभाष्यम्

श्रीभगवद्विषयाचार्यपरीक्षा -

प्रथमः भागः — (1) तिरुप्पल्लाण्डु (2) तिरुप्पल्लियेजुच्चि (3) तिरुप्पावै (4) नीराट्टं (5) पून्चुडल् (6) काप्पिडल् (7) शेन्नियोंगु (8) अमलनादिपिरान् (9) वारणमायिरम् (10) कण्णिनुण् शिरुत्तांबु (11) शिरियतिरुमडल् (12) तिरुवाय्मोलि (13) रामानुजनूत्तन्दादि (अर्थसहिताः कण्ठस्थीकर्तव्याः)

द्वितीयः भागः — भगवद्विषयः (साकल्येन अष्टसहस्री षट्त्रिंशत्सहस्री च व्याख्या अध्येतव्या)

तृतीयः भागः — (1) पंचसूक्तानि (2) अथर्वणोपनिषत् (महानारायणोपनिषच्च (4) श्रीविष्णुसहस्रनामस्तोत्रम् , मुकुन्दमाला, आळवन्दारुस्तोत्रम् गद्यत्रयम् च ।

★ एकैकस्यां परीक्षायां भागशः पूर्णशो वा उपस्थातुं शक्नुवन्ति अभ्यर्थिनः श्रीभाष्याचार्य परीक्षार्थिनः सनातनशिष्टाचारसहिताः कच्छशिखापुण्ड्रयुताः द्विजा आचार्यसन्निधावधीतग्रन्था एवार्हाः ।

श्रीभगवद्विषयाचार्यपरीक्षायां च उपवेशमिच्छन्तश्च सनातनशिष्टाचारयुक्ताः शिखापुण्ड्रपरिधानालंकृता. गुरुमुखात्प्राप्ताध्ययना भवेयुः ।

त्रिष्वंशेषु उत्तीर्णानां शाश्वतसन्मानः 360 रूप्यात्मकः प्रतिवत्सरं प्रदीयते । अंशे अंशयोर्वा उत्तीर्णानां कृते यथोचितं तात्कालिकसन्मानो भवेत् ।

श्रीभाष्याचार्यपरीक्षा 1970 मे मासे 12 13 14 तिथिषु निर्वर्तिष्यमाणायां रामानुजक्रतौ प्रचलेयुः । श्रीभगवद्विषयपरीक्षा च 1970 मे मासे 18, 19, 20 तिथिषु श्रीरंगे निर्वर्तिष्यमाणायां शठकोपक्रतौ प्रचलेयुः

पत्रव्यवहारसंकेतः
श्रीमन्नारायणरामानुजजीयरस्वामी
13 दक्षिणोत्तरवीथी, श्रीरङ्गम्
(तिरुचि) मद्रासूराष्ट्रम्



# चिन्तयाम्यहम्

उमामहेश्वरशास्त्रि

(झंझुटिरागः - चापुतालः)

★

चिन्तयाम्यहमन्तरंगेऽन्वहम् - श्रीज
यन्तपुरकृतवासं - संसार सागर
तारकं - शुभ्र
कुन्दसूनप्रहासं सुन्दरमन्दहासमुखा
रविन्दम्
इन्दिरादृतमन्दिरलोचनम्
आनन्ददं - अन्तःस्कन्दं महः ॥ चिन्त ॥
संचितादि मे पापविकोचकम्
वांछिताखिलार्थप्रदायकम्
संसारासक्तानाम् - मन्दारवृक्षकम्
संचिताद्यखिल - भस्मसात्कारकम्
चिन्तयाम्यह - मन्तरंगेऽन्वहम् - श्रीज
यन्तपुरकृतवासं
इन्दिरादृतमन्दिरलोचनम्
आनन्ददमन्तःस्कन्दमहः ॥



# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## सौम्यवत्सरोत्तरायणपरीक्षाफलितांशाः

## RESULTS OF MARCH EXAMINATIONS

**The following are the Register numbers of the candidetes who got suceessful in tbe Examinations held on 7th 8th and 9th March 1970**

### PARICHAYA

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | I Class:- 526 | 527 | 528 | 535 | 547 | 551 | 552 | |
| 558 | 559 | 560 | 561 | 562 | 563 | 564 | 565 | 566 |
| 584 | 645 | 650 | 652 | 653 | 654 | 655 | 656 | 659 |
| 661 | 662 | 668 | 664 | 666 | 670 | 671 | 683 | 684 |
| 685 | 689 | 693 | 694 | 695 | 696 | 697 | 705 | 706 |
| 710 | 712 | 718 | 714 | 715 | 718 | 722 | 723 | 725 |
| 726 | 729 | 730 | 731 | 735 | 738 | 739 | 740 | 747 |
| 755 | 757 | 761 | 788 | 794 | 795 | 796 | 797 | 793 |
| 800 | 803 | 804 | 805 | 807 | 808 | 810 | 822 | 849 |
| 851 | 852 | 853 | 857 | 858 | 859 | 861 | 863 | 864 |
| 866 | 867 | 869 | 870 | 875 | 876 | 878 | 914 | 919 |
| 931 | 936 | 939 | 941 | 942 | 937 | 1013 | 1019 | 1031 |
| 1043 | 1044 | 1045 | 1046 | 1047 | 1048 | 1049 | 1069 | 1070 |
| 1082 | 1083 | 1084 | 1086 | 1087 | 1088 | 1089 | 1090 | 1091 |
| 1093 | 1094 | 1096 | 1097 | 1124 | 1185 | 1186 | 1187 | |

II Class:- 529 530 531 532 533 537 538

539 549 550 554 570 583 587 601 604

612 614 615 617 621 625 649 657 658

667 668 669 686 687 688 690 691 698

699 700 707 709 716 717 724 727 728

732 733 734 736 741 742 743 744 746

748 749 750 752 753 754 756 758 759

760 790 799 801 802 806 809 815 816

826 827 834 841 842 843 846 854 868

871 872 873 874 880 916 920 922 935

938 940 1006 1009 1010 1018 1025 1028 1029

1030 1065 1067 1068 1071 1072 1074 1093 1121

1123 1125 1126 1127 1130 1133 1136 1150 1151

1157 1158 1168 1173 1181 1184 1188 1189 1196

1222 1227 1229 1263 1264 1330 1331 1332 1333

1334 1336 1355 1356 1363 1364

III Class:- 536 543 571 573 581 608 622

623 624 627 643 646 647 648 651 692

708 711 720 721 745 787 759 824 825

829 830 831 833 839 845 850 877 879

909 910 912 913 915 917 918 921 923

924 925 927 929 930 932 934 937 1005

1012 1026 1027 1051 1052 1058 1066 1076 1078

1079 1080 1085 1095 1122 1128 1129 1131 1132

1134 1135 1142 1143 1144 1145 1148 1149 1153

1156 1159 1160 1161 1162 1163 1165 1166 1171

1179 1180 1182 1191 1192 1194 1195 1223 1224
1225 1226 1228 1242 1244 1245 1246 1247 1248
1249 1250 1329 1335 1337 1340 1341 1357

## ABHIGNA

I Class:- 592 593 596 631 672 674 675
677 767 848 955 988 991 1032 1081 1102A
1138 1139 1141 1209 1267 1268 1269 1270

II Class:- 576 577 588 589 590 591
594 595 597 598 600 630 633 635 637
638 639 641 676 682 708 762 763 765
768 769 770 771 812 817 847 881 882
892 894 895 897 954 961 989 990 992
993 995 996 1020 1022 1033 1036 1050 1064
1098 1100 1101 1102 1137 1146 1198 1199 1202
1204 1208 1210 1211 1231 1232 1233 1236 1238
1266 1344 1348 1354 1359

III Class:- 544 545 567 568 575 579
632 634 640 673 678 679 681 702 764
766 772 883 884 885 889 891 896 943
949 953 957 962 963 964 965 967 971
972 973 975 994 1034 1057 1140 1201 1205
1206 1207 1235 1237 1347 1358

## VICHAKSHANA

I Class:- 778 1103 1105 1107 1114

II Class:- 642 704 774 775 779 780
782 899 900 901 902 903 997 998 999
1000 1011 1023 1104 1106 1109 1110 1113 1115
1212 1213

III Class:- 773 776 777 781 818 819
820 898 904 978 979 980 981 983 984
985 1111 1112

## SAMARTHA

I Class:- 1118

II Class:- 546 903 1039 1040 1041 1062 1116
1218 1360

III Class:- 784 1037 1038 1117

I Part only:- 569 785 821 986 1215 1216
1217

II Part only:- 1214 1272

## KOVIDA

I Class:- Nil
II Class:- Nil
III Class:- 1063

I, II and III Parts only:- 1004
IV Part only:- 1219
IV and V Parts only;- 1002, !241
V Part only:- 1003, 1024, 1042
II and IV Parts only:- 1220
II, III, IV and V Parts only:- 1239

The following are the names of the candidates who stood first in first class of the above examinations. prizes will be awarded to them in due course.

Parichaya:- No 857, V. R. Rama T. Nagar
Abhigna:- No 991 S. Padmavathi Tirunagar
Vichakshha:- No 1114 T. S. Thandavamoorthy Madurai
Samartha:- No 1118, S. Krishnamoorthy Madurai

---

उत्तीर्णाः 613

| परीक्षा | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
| परिचयः | 488 | 415 | 162 | 139 | 114 | — |
| अभिज्ञः | 199 | 181 | 24 | 74 | 48 | — |
| विचक्षणः | 59 | 58 | 5 | 26 | 18 | — |
| समर्थः | 32 | 26 | 1 | 9 | 4 | 9 |
| कोविदः | 12 | 11 | — | — | 1 | 9 |
| | 790 | 691 | 162 | 248 | 185 | 18 |

## उपयुक्तानि केन्द्राणि 83

(1) अम्बत्तूरु (2) अनन्तपुरम् (3) अनकापल्ली (4) अलंपुरम् (5) आल्लगड्डा (6) एर्रचेरुवुपल्लि (7) कडपा (8) काकिनाड (9) कोयम्बत्तूरु (10) क्रोंपेट (11) गणपवरम् (12) गुण्टूरु (13) चित्तूरु (14) चिदम्बरम् (15) टि. नगर (16) तंजावूरु (17) तिरुनगर (18) तिरुवलै (19) तिरुवल्लिक्केणी (20) तिरुवेंगाडु (21) तिंडिवनम् (22) तिरुचिरापल्ली (23) दोम्मरनन्द्याला (24) नंगनल्लूरु (25) नेल्लूरु (26) मद्दिकेरा (27) मदुरै (28) मछलीपट्टणम् (29) मन्नार्गुडि (30) मेट्टूरुडाम् (31) राजमंड्रि (32) वरंगल् (33) विजयवाडा (35) विल्लिपुरम् (35) श्रीरामपुरम् (36) सेलम् (37) हैदराबाद (ए) (38) हैदराबाद (बी)

सं. भा. प्र. सभा,<br>चित्तूरु,<br>31 — 4 — 70

की॰ श्रीनिवासाचार्यः<br>परीक्षामन्त्री



न्यायमाला ७

# अस्नेहदीपन्यायः

"अवरः"

न विद्यते स्नेहः तैलम् यस्य सः, अस्नेहः । तादृशः दीपः यथा वर्तते तथाऽयमपि प्रस्तुतांशः इति समन्वयः ।

तैलम् विना दीपो न ज्वलति । दीपज्वालायाः स्नेहः, तैलम् जीवनम् भवति । अस्नेहश्चेद्दीपः तर्हि स निर्जीव एव । स शाम्यति । दीप्तेः प्रधानकारणम् स्नेह एव ।

एवं यस्य यस्य यद्यत् प्रधानकारणम् भवति तत्र सर्वत्राऽपि अस्य न्यायस्य व्यतिरेकविधया समन्वयः सिध्यति । इदमस्ति, तदप्यस्ति; इदम् नास्ति; तदपि नास्ति - इति रीत्या यस्य सद्भावेन कस्यचित् सद्भावः, यस्य च अभावेन कस्यचिदभावः दृश्यते तत्तस्य कारणम् । कारणम् विना न कार्यम् । अतः कार्यकारणभावापन्नं सर्वं अस्य न्यायस्य स्थानम् भवितुमर्हति ।

विशेषे विश्रान्तस्य अस्नेहदीपन्यायस्य एवम् सामान्यीकरणम् एष्टव्यम् । नोचेदसंगतिरापद्यते । कुत इति चेत् दीपा नानाविधाः । इदानीं अतैलदीपा अपि वर्तन्ते । पूर्वमपि मणिदीपानां रत्नदीपानां प्रसक्तिरस्ति । "अतैलपूर्णा इव रत्नदीपाः" इति कविसूक्तिरप्येतत् द्रढयति । इदानीं पुनः तैलम् विनैव विद्युद्दीपाः विद्युद्घटदीपाश्च (Battery) ज्वलन्ति । अतः दीप्तेः प्रधानकारणम् तैलमेव इति न वक्तुम् शक्यते ।

तैलमपि क्वचित्कारणम् ; तावदेव ! कारणम् विना कार्यं नेत्यर्थे प्रवृत्तस्य अस्य न्यायस्य न काऽपि विप्रतिपत्तिः ।

इयं वस्तुस्थितिः, यथार्थोक्तिः, स्थूलदृष्टिर्वा यत्किञ्चिदस्तु । किन्तु अस्ति किंचिद्विवक्षितमत्रैव । अस्नेहदीपन्याय. न सामान्यीकरणम् सहते न वा स्ववैशिष्ट्यं हातुमुत्सहते ।

"अस्नेहदीपो नैव राजते" इति निश्चप्रचम् । दीप्तेः स्नेहोऽनिवार्यः । स्नेहशब्दः न केवलम् तैलम् वक्ति; अपि तु आर्द्रतां - विलक्षणां रसिकतां - ध्वानयति । येन स्निह्यति, स स्नेहः । स्नेहेन सर्वं सिद्ध्यति । सर्वं दीप्यते । इदानीं स्नेह एव दीप्तिकारणमित्यत्र न काऽपि विप्रतिपत्तिः । न केवलम् ज्वलन् ज्वलिष्यन् वा दीपः स्नेहमपेक्षते, किन्तु सर्वोऽपि दीप्तिं अपेक्षमाणः, विराजमानः स्नेहम् अपेक्षते । यस्मिन् विषये सर्वे स्निह्यन्ति, यस्य च समेषां सुहृदां स्नेहस्समुपलब्धः - स नूनं अतैलपूर्ण एव दीपः प्रदीपः रत्नदीपश्च । बन्धूनां मित्राणां परिवाराणां च किल स्नेहेन संपन्नो गृहस्थो विराजते । अस्नेहश्चेत्सकथम् संपन्नो भवेत् ? गृहस्थो वाऽन्ततो गत्वा ? स्नेह एव गार्हस्थस्य वा संपन्नताया वा मूलम् ।

एवम् जनप्रातिनिध्यम् निर्वहतां महतामपि जनानां गणानां च स्नेह एव मूलम् मत । सज्जन गण-मनः यदा तेषां विरुद्धम् भवति तदा तन्महत्वमप्यपयाति । तदानीं ते "× प्रतिनिधयः = अस्नेहदीपाः, एव भवन्ति । जनप्रातिनिध्यमूलकेषु उन्नतपदेषु त एव विराजन्ते ये पुनः जनगणमनस्स्नेहपात्राण्यासन् ।

किं बहुना, विराजमानास्सर्वेऽपि दीपाः प्रदीपा वा भवन्तु, नृपाः कृपापूर्णा वा भवन्तु-स्नेहमेव अपेक्षन्ते । अस्नेहदीपन्यायः एवं सुस्थितः ।

---



## सकलशास्त्र रहस्यवक्ता

दुर्लभं मानुषं जन्म ब्रह्मज्ञानं सुदुर्लभम् ।
शङ्कराय नमस्तस्मै येन तन्सुलभं कृतम् ॥

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
तत्वज्ञानं च येनेदं शिक्षितं तं नमाम्यहम् ॥

ईशकेनकठादीनां भाष्येण महता स हि ।
संभूतः सार्थ आचार्य आर्याणां स हि सद्गुरुः ॥

ज्ञानान्मोक्षः सदालभ्य एवमुपदिदेश सः ।
शं कृतं तेन तस्मात्स लोके शङ्कर उच्यते ॥

अभ्रे तारा, यतिषु नियमः, शीतलत्वं सुधांशौ
धर्मे क्षेमं, कविषु कविता, चञ्चला वारिवाहे
यावच्च स्तो जनसुखकरौ चन्द्रसूर्यौ धरायाम्
तावन्नूनं भुवि हितकरः शंकरः पूजनीयः ॥

या. वि. देवासकरः

सकलवेदसरससमन्वयसंपादयिता



# श्रीमद्रामानुजाचार्यः



मेषार्द्रासम्भवं विष्णोर्दर्शनस्थापनोत्सुकम् ।
तुण्डेरमण्डले शेषमूर्तिं रामानुजं भजे ॥

कल्यब्दे द्व्यब्धिकुम्भे बुधजनविनुते वत्सरे पिङ्गलाख्ये
चैत्रे मासे गते च त्रियुतदशदिने दीप्यमाने हिमांशौ ।
पञ्चम्यार्द्रासमेते सुरगुरुदिवसे कर्कटाख्ये च लग्ने
श्रीमान् रामानुजार्यस्समजनि निगमान्तार्थसंरक्षणार्थम् ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये ॥

गुणगुणिनोर्भेदः किल नित्यः
चिदचिद्द्वयपरभेदस्सत्यः ।
तद्द्वयदेहो हरिरिति तत्वं
पश्य विशिष्टाद्वैतं तत्वम् ॥

# सुलभपाठमाला ४३

## वृक्षाः ६

## (तिन्त्रिणीवृक्षः)

*

तिन्त्रिणीवृक्षः बहुत्र संदृश्यते। अयं वृक्षः प्रायशः शुष्कप्राये भूमौ वर्धते। अयं महानुन्नतः शाखावलीपरीतः ऊर्ध्वं तिर्यक् च व्याप्नोति। प्रकाण्डोऽस्य स्थूलस्थूलः प्रवर्धते प्रकाण्डोपरि शाखाः सुदीर्घाः शाखासु चोपशाखा इति रीत्यायं महान् वर्धते। अस्य शाखा नवशाखाश्च नमनशीलाः अतूट्यन्तः अभङ्गाः सुदृढा वर्तन्ते। शाखा-प्रकांडेपरि च त्वक् स्फुटितं खण्डशः समासक्त रूक्ष दरीदृश्यते। तिन्त्रिणी-पत्राणि सूक्ष्माणि भवन्ति।

अस्य दारु गृहनिर्माणकर्मणि नैवोपयुज्यते, केवलं पाकक्रियाया-मुपयुज्यते। वदन्ति गृहिण्यः तिंत्रिणीकाष्ठमार्द्रमपि ज्वलेत् सुतीक्ष्णतापं पाचयेदाहारादिकमिति। तिन्त्रिण्यंगारा अतिमूल्यास्संभाव्यन्ते।

अयं वृक्षः निबिडं किसलयति पुष्प्यति फलति च। अस्य किसलयानि शाकपाकेषूपयुज्यन्ते। अनेन लेह्यं चूर्णिका च विधीयते। अनेन साकं श्रपिता आढकदाली अतिरुचिरा आस्वाद्यते। अस्य पुष्पाण्यपि किसलयवत् कार्यकारीणि भवन्ति। किन्तु पुष्पेषु किसलयतः अम्लता न्यूना भवति। अस्य बालशलाटूनि बहुस्वादूनि भवन्ति। प्रौढशलाटुभिर्लेह्यम् निर्मीयते क्वचन देशे यदेव आवत्सरान्तं आहारव्यञ्जनत्वेन तैः उपयुज्यते फलानि च सुपक्वानि विमुक्तत्वचि दूरीकृतबीजानि पिंडखर्जूरवत् संरक्ष्यन्ते। एतदेव तिन्त्रिणीफलपिंडः। एतेनैव लेह्यचोष्यादिकं सर्व-

मारभ्यते । कुत्रचिद्देशे तु एतत्प्रत्याम्नायत्वेन रुद्राक्षफलं आयोज्यते । दक्षिणापथे तु शाकनिर्माणे तिंत्रिणीफलस्यैव साम्राज्यं वर्तते । रसज्ञानामियं भावना यज्जम्बीरद्रवोपयोगेपि न भवेदेतादृशी स्वादुता शाकेष्विति ।

चित्रान्नं नाम किंचिदुपहारं कल्पयन्ति दाक्षिणात्या यस्य नाम पुलिहोरै इति आख्यायते । एतच्च दक्षिणदेशे विष्ण्वालयेषु सर्वत्र दैवाय निवेदयन्ति भक्ताः । एतच्च उष्णान्नं हरिद्राचूर्णेन क्वथिततैलेन च संभाव्य, लवणमरिचहिंगुकालशाकैः सम्मिश्रय च परिक्वथिततिंत्रिणी फलसारेण आस्वासयन्ति । एवं निष्पन्नं च चित्रान्नम् विचित्ररसं रसयति भोक्तॄन् ।

---

## कोविदपरीक्षां

उत्तीर्य

संस्कृतपंडितपदवीं निर्वहत !

एतत्समीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्वयोग्या अंगीकृता । अतः तत्र उत्तीर्य पंडिता भवत ।

इति

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.

# सहृदयेषु निवेदनम्

★

सहृदयाः,

भगवतः भवतां च अनुग्रहेण एषा सभा दिनदिनाभिवृद्धिं लभमाना अधुना पञ्चविंशतितमे वयसि पदमर्पयति। अत्रान्तरे अस्या जीविते बहूनि संकटानि बहुला आनन्दोत्सवाश्च समघटन्त। परन्तु संस्कृतप्रचारकार्ये बद्धभ्रुकुटिरेषा नवयौवने विलासलीलाः प्रकाशयति।

अत्र समये द्वित्रमासाभ्यन्तरे रजतोत्सवस्य प्रस्तुत्या एषा माननीयेति कार्यवाहानां अभिलाषो वर्तते। निश्चिता तिथिश्च अल्पेनैव समयेन निर्णीय प्रकाश्येत च। अत्रान्तरे भवद्भिरेतत्सभाकार्यपरणां आशीर्वचनं निबन्धो वा यः कश्चित् अनुप्रेष्य अनुगृह्णन्तु येन रजतोत्सव-संदर्भेण प्रकाशयिष्यमाणायाः संचिकायाः परिपोषः अलंकारश्च संपद्येत।

यदि चार्थिकसहयोगे उत्साहः सौविध्यं च भवेत्तर्हि यथाशक्ति यथोत्साहं च उपकुर्युरिति सप्रश्रयं निवेदनम्।

इति

सं. भा. प्र. सभा,
चित्तूरु.

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A\3/65 Dated 14-7-65
R. N. 8145/60. Postal R. No. H. 493

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् रू. ४-००

## प्रहेलिके



कोलाकृतिरपारेवो मोरोहंसो जलोदरी ।
कंसारिरात्तलीलो वो वाघलो भूकलोऽवतु ॥

अर्थः - कोलस्य आकृतिरिव आकृतिः यस्य सः वराहरूपः, अपारे संसारे अवतीति अपारेवः, माया लक्ष्म्या उरसि हंसः, जले उदरं गृहं यस्यास्तीति तादृशः, आत्ता लीला येन सः, वा निश्चयेन अघलः पापनाशकः, भुवं कलयति उद्धरतीति तथाभूतः कंसारिः श्रीकृष्णः वः युष्मान् अवतु ॥

मोमारामममादं द्वे दयागदलनं भपः ।
यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥

अर्थः - (अत्र प्रथमपादस्थाक्षराणां द्वितीयपादस्थाक्षरैस्सह यथासंख्यमन्वयः) तथा च – मोहः, मदः, माया, रागः, मलः, मानम्, दंभः, द्वेषः एते यस्य न भवन्ति स परमगतिं प्राप्नोति ।



Published by Sri N. Ramanatha Iyer B, A.; B L,, Advocate
& Secretary S, B. P. Sabha, Chittoor (A. P)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C. 1500